॥ श्री ॥

# अभिनवरागमंजरी ।

पंडितविष्णुशर्मविरचिता ।


प्रकाशकः

भालचन्द्र सीताराम सुकथनकर, एम्. ए., एल्‌एल्. बी.,

सालिसिटर, हायकोर्ट, मुंबई.

शक १८४२ सन १९२१.

॥ श्रीः ॥

पंडितविष्णुशर्मविराचिता

# अभिनवरागमंजरी।

सा च

भालचंद्रशर्मणा

पुण्यपत्तने

आर्यभूषणाख्यमुद्रालये मुद्राक्षरैरंकयित्वा प्राकाश्यं नीता।

शकः १८४३ सन् १९२१

---

Printed at the Arya-Bhushan Press, Poona, by
Anant Vinayak Patvardhan
AND
Published by Bhalachandra Sitaram Sukathankar M. A. LL. B.,
22 Carnac Road, Bombay.

## वस्तुसंग्रहः ।

### स्वराध्यायः



---

### रागाध्यायः



---

॥ श्रीः ॥

# अभिनवरागमंजरी ।

## अथ स्वराध्यायः ।

नारायणं नमस्कृत्य भरतादिमुनीनपि ।
रच्यतेऽभिनवरागमंजरी विष्णुशर्मणा ॥ १ ॥

सकलाः सकला विद्या यथायोग्यं विभाव्य च ।
कलारत्नस्य गानस्य तत्वतो लक्षणं ब्रुवे ॥ २ ॥
नृत्यवाद्यविशेषाभ्यां गानं चेदुपबृंहितम् ।
तदा संगीतमित्याहुर्लक्ष्यलक्षणकोविदाः ॥ ३ ॥
गीतवादित्रनृत्यानां यस्मादंग्यंगता भवेत् ।
गानं केवलमप्याहुः संगीतं लक्ष्यवेदिनः ॥ ४ ॥

उद्देशः ।

संगीतं ध्वनिसंभूतिः श्रुतयस्तद्व्यवस्थितिः ।
शुद्धाः स्वरा विकाराद्याः स्वरस्थानानि तत्वतः ॥ ५ ॥
संवाद्यादिस्वराणां च लक्षणानि सविस्तरम् ।
वर्णालंकारगमका यथोक्ताः पूर्वसूरिभिः ॥ ६ ॥
ग्रामस्य लक्षणं तद्वन्मूर्छनालक्षणं तथा ।
रागमेलाश्च सर्वेऽपि संपूर्णत्वादिभेदतः ॥ ७ ॥

तत्तन्मेलस्थरागाणां भेदकारणलक्षणम् ।
आलापलक्षणं गातुर्गुणदोषानुदर्शनम् ॥ ८ ॥
ताना उद्ग्राहभूताश्च स्वयं रागांगदर्शकाः ।
एतावंति च वस्तूनि ग्रंथेऽस्मिन् कथितानि हि ॥ ९ ॥

---

## संगीतम् ।

मार्गदेशिप्रकाराभ्यां संगीतं द्विविधं स्मृतम् ।
अनादिसंप्रदायं यन्नियताभ्युदयप्रदम् ॥ १० ॥
शास्त्रोक्तसर्वनियमैः संपन्नं तदकृत्रिमम् ।
मार्गगीतं पुरैवासीत् प्रयुक्तं भरतादिभिः ॥ ११ ॥
अधुना गीयते यच्चानियतं कामचारतः ।
देशे देशे प्रचरितं तत्सर्वं देशि संमतम् ॥ १२ ॥
तदपि द्विविधं ज्ञेयं दक्षिणोत्तरभेदतः ।
कर्णाटकं दक्षिणे स्याद्धिंदुस्थानि तथापरे ॥ १३ ॥
हिंदुस्थानिप्रसिद्धं यद्गीतं तत्र यथाश्रुतम् ।
स्वररागादि यत्किंचिदस्मिन् ग्रंथे विवक्ष्यते ॥ १४ ॥

## नादोत्पत्तिः ।

आत्मा विवक्षमाणोऽयं मनः प्रेरयते मनः ।
श्वसनेंद्रियमाहंति तत्प्रेरयति मारुतम् ॥ १५ ॥
वक्षःस्थलस्थितः सोऽथ क्रमादूर्ध्वपथे चरन् ।
हृत्कंठास्यादिगात्रोत्थो लक्ष्ये नादोऽभिधीयते ॥ १६ ॥

---

व्यवहारे त्वसौ त्रेधा हृदि मंद्रोऽभिधीयते ।
कंठे मध्यो मूर्ध्नि तारो द्विगुणश्चोत्तरोत्तरः ॥ १७ ॥
तस्य द्वाविंशतिर्भेदाः श्रवणाच्छ्रुतयो मताः ।
उच्चोच्चतरतायुक्ताः प्रभवंत्युत्तरोत्तरम् ॥ १८ ॥
हृदि कंठे तथा शीर्षे श्रुतिद्वाविंशतिर्मता ।



## श्रुतिनामानि ।

तीव्रा कुमुद्वती मंदा छंदोवती दयावती ॥ १९ ॥
रंजनी रतिका रौद्री क्रोधा वज्री प्रसारिणी ।
प्रीतिर्मार्जा क्षिती रक्ता संदीपिन्यथ लापिनी ॥ २० ॥
मदंती रोहिणी रम्या चोग्रा क्षोभिणिकेति च ।
ख्यातानि श्रुतिनामानि पूर्वाचार्यैः क्रमादिति ।

## श्रुतिस्वरव्यवस्थितिः ।

रागादिव्यवहाराय तासु सप्त स्वराः स्थिताः ॥ २१ ॥
षड्जश्च ऋषभश्चैव गांधारो मध्यमस्तथा ।
पंचमो धैवतश्चाथ निषादश्चेत्यनुक्रमात् ॥ २२ ॥
तेषां संज्ञाः सरिगमपधनीत्यपरा मताः ।
वेदाचलांकश्रुतिषु त्रयोदश्यां श्रुतौ तथा ॥ २३ ॥
सप्तदश्यां च विंश्यां च द्वाविंश्यां च श्रुतौ क्रमात् ।
षड्जादीनां स्थितिः प्रोक्ता शुद्धाख्या भरतादिभिः ॥ २४ ॥
हिंदुस्थानीयसंगीते श्रुतिक्रमविपर्ययतः ।
एते शुद्धस्वराः सप्त स्वस्वाद्यश्रुतिसंस्थिताः ॥ २५ ॥
चतुःश्रुतियुतः षड्जो मध्यमः पंचमस्तथा ।
रिधौ त्रिश्रुतिकौ प्रोक्तौ गनी द्विश्रुतिकौ क्रमात् ॥ २६ ॥
ननु नास्ति स्वरश्रुत्योर्भेदो नादैकरूपयोः ।
विद्यते परिणामित्वपरिणामत्वसंभवः ॥ २७ ॥
अस्ति भेदस्तयोर्यद्वत् स्वर्णटंककिरीटयोः ।
श्रुतिर्नाम भवेन्नादविशेषः स्वरकारणम् ॥ २८ ॥
नित्यं गीतोपयोगित्वमभिज्ञेयत्वमप्युत ।
लक्ष्ये प्रोक्तं सुपर्याप्तं संगीतश्रुतिलक्षणम् ॥ २९ ॥

---

## सप्तकानि ।

सरिगमाः पधौ नीति सरिगमाः पधौ नि च ।
सरिगमाः पधौ नीति स्थानत्रयमिदं जगुः ॥ ३० ॥

प्रथमं सप्तकं मंद्रं द्वितीयं मध्यमं स्मृतम् ।
तृतीयं तारसंज्ञं स्यादेवं स्थानत्रयं मतम् ॥ ३१ ॥

### स्वरविकृतयः ।

स्वराः स्वनियतश्रुतिप्रच्युता विकृता मताः ।
सपावविकृतावन्ये विकृताः पंच कीर्तिताः ॥ ३२ ॥
स्वरः पश्चान्निवृत्तः सन् कोमलादित्वमेति चेत् ।
तदुत्तरस्वरे गच्छन् तीव्रतादिकमेति चेत् ॥ ३३ ॥
रिःकोमलः कोमलो गो मध्यमस्तीव्रकाभिधः ।
निधौ कोमलसंज्ञौ च पंचैते विकृताः स्मृताः ॥ ३४ ॥
मध्ये तु षड्जर्षभयोः संस्थितः कोमलर्षभः ।
गांधारो रिगयोर्मध्ये संस्थितः कोमलो मतः ॥ ३५ ॥
मपयोरंतरे तीव्रमध्यमः समुदीरितः ।
पधयोरंतरे चैवं स्थितः कोमलधैवतः ॥ ३६ ॥
धनिमध्ये कोमलश्च निषादः परिकीर्तितः ।
पंचैते विकृताः सप्त शुद्धास्ते द्वादश स्वराः ॥ ३७ ॥

### स्वरस्थानलक्षणम् ।

स्वरस्य हेतुभूताया वीणायाश्चाक्षुषत्वतः ।
तत्र स्वरविबोधार्थं स्थानलक्षणमीर्यते ॥ ३८ ॥
पूर्वोत्त्ययोश्च मेर्वोश्च मध्ये तारकसः स्थितः ।
तदर्धे त्वतितारस्य सस्वरस्य स्थितिर्भवेत् ॥ ३९ ॥
मध्यस्थानादिमषड्जमारभ्यातारषड्जगम् ।
सूत्रं कुर्यात्तदर्धे तु स्वरं मध्यममाचरेत् ॥ ४० ॥
भागत्रयसमायुक्तं तत्सूत्रं कारितं भवेत् ।
पूर्वभागद्वयादग्रे स्थापनीयोऽथ पंचमः ॥ ४१ ॥
षड्जपंचमगं सूत्रमंशत्रयसमान्वितम् ।
तत्रांशद्वयसंत्यागात् पूर्वभागे तु रिर्भवेत् ॥ ४२ ॥



पंचमोत्तरषड्जाख्यमध्ये धैवतमाचरेत् ।
यथा शुद्धर्षभस्यासौ प्रस्फुटः पंचमो भवेत् ॥ ४३ ॥
मेरुधैवतयोर्मध्ये तीव्रगांधारमाचरेत् ।
तत्संवादिनिषादाख्यं षड्जधैवतयोः क्षिपेत् ॥ ४४ ॥
मध्ये षड्जर्षभकयोः संस्थितः कोमलर्षभः ।
षड्जपंचमभावेन तत्संवादी धकोमलः ॥ ४५ ॥
षड्जपंचमयोर्मध्ये गांधारः कोमलो भवेत् ।
मध्यपंचमयोर्मध्ये तीव्रमध्यममाचरेत् ॥ ४६ ॥
सपयोर्मध्यभागे स्याद्भागत्रयसमन्विते ।
पूर्वभागद्वयादग्रे निषादः कोमलो भवेत् ॥ ४७ ॥
स्वरज्ञानविहीनेभ्यो मार्गोऽयं दर्शितो मया ।
स्वरसंवादिताज्ञानं स्वरस्थापनकारणम् ॥ ४८ ॥
सपयो रिधयोश्चैव तथैव गनिषादयोः ।
संवादः संमतो लोके मसयोः स्वरयोर्मिथः ॥ ४९ ॥

### वादिसंवाद्यादिलक्षणम् ।

स्वराश्चतुर्विधा ज्ञेया रागोत्पादनगोचराः ।
वादी संवाद्यनुवादी विवादी च चतुर्विधाः ॥ ५० ॥
वादी स्वरस्तु राजा स्यान्मंत्री संवादिसंज्ञितः ।
स्वरो विवादी वैरी स्यादनुवादी च भृत्यवत् ॥ ५१ ॥
प्रयोगो बहुधा यस्य स स्याद्वादी नृपोपमः ।
ययोर्भवेयुः श्रुतयो द्वादशाष्टाथवान्तरे ॥ ५२ ॥
मिथः संवादिनौ तौ स्तो राज्ञः सचिवसंनिभौ ।
विवादी रक्तिविच्छेदी शत्रुतुल्यः स कीर्तितः ॥ ५३ ॥
अनुवादी तटस्थो यः किंकरप्रतिमः स्वरः ।
यो यद्रागे प्रधानःस्यात् स्वरोंऽशः कीर्त्यते जने ॥ ५४ ॥

विवादी विपरीतत्वाद्धीरैरुक्तो रिपूपमः ।
स्वरूपमर्दनं तेन प्रयोगे स्याद्विवादिना ॥ ५५ ॥
स्वरूपमर्दनाभावे गीते रक्तिर्न लभ्यते ।
शत्रूपमर्दने हि स्याद्राज्ञां लोके प्रकाशनम् ॥ ५६ ॥
प्रतिरागं भवेद्वादी सर्वरक्तिप्रदायकः ।
निर्णायको रागनाम्नः समयस्यापि सूचकः ॥ ५७ ॥
सुप्रमाणयुतो रागे विवादी रक्तिवर्धकः ।
यथैपत्कृष्णवर्णेन शुभ्रस्यातिविचित्रता ॥ ५८ ॥

### ग्रहन्यासादिलक्षणम् ।

येनादौ गीयते गीतं स्वरेण स भवेद्ग्रहः ।
न्यासस्वरः स कथितो येन गीतं समाप्यते ॥ ५९ ॥
अवांतरसमाप्तिं यो रागस्यापि तनोति सः ।
अपन्यासः संस्मृतोऽन्यस्त्वात्यंतिकसमाप्तिकृत् ॥ ६० ॥

### वर्णलक्षणम् ।

गानक्रियोच्यते वर्णः स चतुर्धा निरूपितः ।
स्थाय्यारोह्यवरोही च संचारीत्यथ लक्षणम् ॥ ६१ ॥
स्थित्वा स्थित्वा प्रयोगः स्यादेकैकस्य स्वरस्य यः ।
स्थायीवर्णः स विज्ञेयः परावन्वर्थनामकौ ॥ ६२ ॥
एतत्संमिश्रणाद्वर्णः संचारी परिकीर्तितः ।
न हि वर्णाद्विना गानं कर्तुं केनापि शक्यते ॥ ६३ ॥

### अलंकाराः ।

विशिष्टवर्णसंदर्भमलंकारं प्रचक्षते ।
तस्य भेदा बहुतरा योजनीया विचक्षणैः ॥ ६४ ॥
भद्रो नंदश्च विस्तीर्णो निष्कर्षाभ्युच्छ्रयौ तथा ।
त्रिवर्णो हसितो गात्रवर्ण आक्षिप्तप्रेंखितौ ॥ ६५ ॥





प्रस्ताराक्षेपकप्रेंखाः श्येनहुंकारकोकिलाः ।
सदानंदो महावज्रो जवःशंखश्च विंशतिः ॥ ६६ ॥
अलंकाराद्विना रागा विस्तारं नाप्नुवंति हि ।
एतैः कृत्वा प्रगातॄणां स्वरतालप्रवीणता ॥ ६७ ॥
शशिना रहितेव निशा विजलेव नदी लता विपुष्पेव ।
अविभूषितेव कांता गीतिरलंकारहीना स्यात् ॥ ६८ ॥

### गमकाः ।

स्वरस्य कंपो गमकः श्रोतृचित्तसुखावहः ।
स्वीयस्थानश्रुतिगतच्छायामन्याश्रयामपि ॥ ६९ ॥
छायां गमयतीत्येष गमकः परिकीर्तितः ।
ते च पंचदश प्रोक्ता गमका भरतादिभिः ॥ ७० ॥
तिरिपः स्फुरितश्चैव कंपितो लीन इत्यपि ।
आंदोलितो वलिश्चाथ त्रिभिन्नः कुरुलाहतौ ॥ ७१ ॥
उल्लासितः प्लावितश्च हुंफितो मुद्रितस्तथा ।
नामितो मिश्रितश्चेति भेदाः पंचदश स्मृताः ॥ ७२ ॥

### ग्रामाः ।

शुद्धस्वरसमूहात्मा ग्रामो लक्ष्ये समीरितः ।
षड्जमध्यमगांधारा ग्रामाः प्रोक्ताः पुरातनैः ॥ ७३ ॥
एक एव भवेत् षड्जग्रामोऽधुनाऽत्र लक्ष्यके ।
षड्जपंचमभावेन स्वरास्तत्र व्यवस्थिताः ॥ ७४ ॥

### मूर्छना ।

क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम् ।
मूर्छना कीर्तिता शास्त्रे नित्यं ग्रामाश्रया पुरा ॥ ७५ ॥

### मेलाः ।

मूर्छनाशब्दपर्यायो लक्ष्ये मेलः समादृतः ।
मेलः स्वरसमूहः स्याद्रागव्यंजनशक्तिमान् ॥ ७६ ॥

सप्तस्वरसमूहात्मा मेलः संपूर्ण ईरितः ।
षाडवौडुवभिद्द्वारा सोऽपि रागत्वमर्हयेत् ॥ ७७ ॥
शुद्धविकृतस्वरैः स्युर्लोके मेला द्विसप्ततिः ।
प्रसिद्धाः पुनरेतेषु मेलाः कतिचिदेव हि ॥ ७८ ॥
मेलः सप्तस्वरः पूर्णः षट्स्वरः षाडवो मतः ।
पंचस्वरैरौडुवः स्यादेवं मेलस्त्रिधा मतः ॥ ७९ ॥
मेलानुसारतो लक्ष्ये रागे त्रैविध्यमीरितम् ।
पंचोनेभ्यः स्वरेभ्यस्तु रागो न स्यात् कदाचन ॥ ८० ॥
द्वौ त्रयो वापि चत्वारः स्युस्ताना रंजकस्वराः ।
पंचाद्यैरथ रागः स्यादिति लक्ष्यविदां मतम् ॥ ८१ ॥
संपूर्णस्वरमेलोत्थो राग एक उदाहृतः ।
तत्रैकैकस्वरत्यागात् षड्विधः षाडवो भवेत् ॥ ८२ ॥
पंचाधिकदशत्वं हि स्वरद्वयवियोगतः ।
आरोहे चावरोहेऽपि स्वरत्यागः सुसंमतः ॥ ८३ ॥
एकैकमेलतो रागा बहवः संभवंत्युत ।
तेषामगाधरूपत्वात् संख्यां कर्तुं न शक्यते ॥ ८४ ॥
तथापि न रंजकास्ते सर्वे लोके समंततः ।
प्रसिद्धाः पुनरेतेषु रागाः कतिचिदेव हि ॥ ८५ ॥

## रागलक्षणम् ।

योऽयं ध्वनिविशेषस्तु स्वरवर्णविभूषितः ।
रंजको जनचित्तानां स रागः कथितो बुधैः ॥ ८६ ॥
मेलाः प्रस्तारतो नेया द्विसप्ततिरुपायतः ।
प्रसिद्धाः पुनरेतेषु लक्ष्ये कतिचिदेव हि ॥ ८७ ॥
अतस्तेषु परित्यज्य सर्वांस्तानप्रसिद्धकान् ।
केवलं दशसंख्यास्ते उद्दिश्यंते मया क्रमात् ॥ ८८ ॥



## जनकमेलाः ।

आदिमः सर्वमेलानां वेलावलीसुमेलकः ।
मेलः कल्याणरागस्य खंमाजस्य ततःपरम् ॥ ८९ ॥
ततो भैरवमेलः स्यात् पौरवीमेलकस्ततः ।
मारवाख्यो भवेन्मेलः काफीमेलस्ततःपरम् ॥ ९० ॥
आसावरीसुमेलः स्यादष्टमो लक्ष्यविन्मते ।
नवमो भैरवीख्यातो दशमस्तोडिकाव्हयः ॥ ९१ ॥

## मेलस्वरूपलक्षणम् ।

शुद्धाःसप्तस्वरा रम्या वादनीयाः प्रयत्नतः ।
तेन वादनमात्रेण वेलावली भवेच्छुभा ॥ ९२ ॥
एवं सति मध्यमाख्यो भवेत्तीव्रस्तदा स्फुटम् ।
कल्याणी रागिणी ज्ञेया ततो गायकनायकैः ॥ ९३ ॥
शुद्धाः सप्तस्वरास्तेषु निषादः कोमलो यदा ।
वीणायां व्यक्तिमाधत्ते खंमाजाभिधरागिणी ॥ ९४ ॥
शुद्धाः सप्त स्वराः कार्या रिधौ तेषु च कोमलौ ।
भैरवाख्यो भवेन्मेलः प्रस्फुटः प्रातरिष्टदः ॥ ९५ ॥
एवं सति मध्यमाख्यो भवेत्तीव्रस्तदा स्वयम् ।
रागिणी पूर्विका भूयात् सायंगेया सुरक्तिदा ॥ ९६ ॥
एवं सति धैवताख्यस्तीव्रत्वं तत्र याति चेत् ।
मारवा व्यक्तिमाधत्ते परमेलप्रवेशिका ॥ ९७ ॥
शुद्धाः सप्त स्वराः कार्या निगौ तत्र च कोमलौ ।
काफिनामा भुवि ख्यातो मेलकः संभवेत् स्वयम् ॥ ९८ ॥
एवं सति धैवताख्यः स्वरो मृदुत्वमेति चेत् ।
आसावरीसमुत्पत्तिर्भूयादिति परिस्फुटम् ॥ ९९ ॥

एवं सति द्वितीयोऽपि स्वरो मृदुत्वमेति चेत् ।
भैरवीं रागिणीं रम्यां तत्र पश्यंति कोविदाः ॥ १०० ॥

एवं सति मनी तीव्रौ भवेतां भूरिरक्तिदौ ।
तोडीं तत्र विजानंति लक्ष्यलक्षणकोविदाः ॥ १०१ ॥

## आलापलक्षणम् ।

ग्रहांशमंद्रताराणां न्यासापन्यासयोस्तथा ।
अल्पत्वस्य बहुत्वस्य षाडवौडुवयोरपि ॥ १०२ ॥

अभिव्यक्तिर्भवेद्यत्र स आलाप उदीरितः ।
स द्विधा कथितो रागरूपकाभ्यां विशेषणात् ॥ १०३ ॥

रागालापः स विज्ञेयो योऽनपेक्ष्यैव रूपकम् ।
स्वस्थानकैश्चतुर्भिः स्यादिति गीतविदो विदुः ॥ १०४ ॥

रूपकं तद्वदेवस्यात् पृथग्भूतविदारिकम् ।
एकाकारः स वै रागालापः स्यादविदारिकः ॥ १०५ ॥

यो विरम्य विरम्यैव न्यासापन्यासकेषु च ।
प्रवृत्तो रूपकालापो गीतविज्ञमते भृशम् ॥ १०६ ॥

यत्रोपवेश्यते रागः स्वरे स्थायी स कथ्यते ।
ततश्चतुर्थो द्व्यर्धः स्यात् स्वरे तस्मादधस्तने ॥ १०७ ॥

चालनं मुखचालः स्यात् स्वस्थानं प्रथमं च तत् ।
द्व्यर्धस्वरे चालयित्वा न्यसनं तद्द्वितीयकम् ॥ १०८ ॥

स्थायिस्वरादष्टमस्तु द्विगुणः परिकीर्तितः ।
द्व्यर्धद्विगुणयोर्मध्ये स्थिताः अर्धस्थिताः स्वराः ॥ १०९ ॥

अर्धस्थिते चालयित्वा न्यसनं तु तृतीयकम् ।
द्विगुणे चालयित्वा तु स्थायिन्यासाचतुर्थकम् ॥ ११० ॥



एभिश्चतुर्भिः स्वस्थानै रागालप्तिर्मता सताम् ।
रागालपनमालप्तिः प्रकटीकरणं मतम् ॥ १११ ॥

स्तोकस्तोकैस्ततः स्थायैः प्रसन्नैर्बहुभंगिभिः ।
जीवस्वरव्याप्तिमुख्यै रागस्य स्थापना भवेत् ॥ ११२ ॥

अधुना लक्ष्यसंगीते कामचारप्रवर्तनात् ।
आलापनियमानां तु विपर्यासः प्रदृश्यते ॥ ११३ ॥

---

## सुगायकः ।

अभ्यासशीलः स्वायत्तकंठो लयविचक्षणः ।
रागरागांगतत्वज्ञो विविधालप्तिकोविदः ॥ ११४ ॥
त्रिस्थानप्रोक्तगमकेष्वनायासलसद्गतिः ।
जितश्रमस्तालकलाप्रगल्भो ग्रहमोक्षवित् ॥ ११५ ॥
सुसंप्रदायः सुघटः प्रभूतप्रतिभान्वितः ।
अदभ्रस्थायसंचारः श्रोतृचित्तानुरंजकः ॥ ११६ ॥
गंभीरमधुरध्वानः सर्वकाकुविशेषवित् ।
सावधानः सुशारीरः सर्वदोषविवर्जितः ॥ ११७ ॥
श्लक्ष्णसुस्निग्धमधुरगीतातिशयकौशलः ।
गायकाग्रेसरः प्रोक्तो निर्गर्वो धारणापटुः ॥ ११८ ॥

## दुर्गायकः ।

कंपितः शंकितो भीतः संदष्टोद्घृष्टझोंबकाः ।
सूत्कारी विकलः काकी कराली विनिमीलकः ॥ ११९ ॥
वितालः करभो वक्री विरसः सानुनासिकः ।
उद्भडो मिश्रकोऽव्यक्तः स्थानभ्रष्टोऽव्यवस्थितः ॥ १२० ॥
अपस्वरः प्रसारी च तुंबक्यनवधानकः ।
इत्येते निंदिता लोके गायनाः पंचविंशतिः ॥ १२१ ॥

## शारीरम् ।

अनभ्यासेऽपि रागाभिव्यक्तिशक्तिस्तु या ध्वनेः ।
तच्छारीरं विदुर्यत्स्याच्छरीरेण सहोद्भवात् ॥ १२२ ॥

घनतास्निग्धताकांतिरक्तिमाधुर्यमार्दवैः ।
गांभीर्यादिगुणैर्युक्तं तत् सुशारीरमीरितम् ॥ १२३ ॥

निःसारतापस्वरताकार्श्यकार्कश्यरुक्षता ।
रक्तिहीनत्वमित्याद्यैः कुशारीरं तु दुर्गुणैः ॥ १२४ ॥

---

इति स्वराध्यायः ।

---

# अथ रागाध्यायः ।

## कल्याणीमेलजन्यरागाः ।

कल्याणीमेलसंजाता रागाः प्रोक्तास्त्रयोदश ।
विभक्तास्ते त्रिधा लक्ष्ये ह्यमैकमद्विमा इति ॥ १ ॥

भूपाली शुद्धकल्याणश्चंद्रकांतो जयंतकः ।
अमे वर्गे निधीयंते लक्ष्यलक्षणकोविदैः ॥ २ ॥

मालश्रीरिमनाख्यातो हिंदोलो लक्ष्यविश्रुतः ।
एकमध्यमसंपन्ना भवेयुर्धीमतां मते ॥ ३ ॥

छायानाटहमीराव्हश्यामकामोदनामकाः ।
केदारगौडसारंगौ द्विमध्यमविभूषिताः ॥ ४ ॥

---

भूपाल्यां तु मनी न स्तः शुद्धाख्ये रोहणे न तौ ।
भूपालीतुल्यको जैत्रः पंचमांशो भिदां भजेत् ॥ ५ ॥

आरोहणे मरिक्तः स्याच्चंद्रकांताभिधो जने ।
शुद्धकल्याणसादृश्यं दधन् रक्तिप्रदो निशि ॥ ६ ॥

इमनः स्यात् सदा पूर्णो मालश्रीररिधा ततः ।
हिंदोले रिपहीनत्वं प्राबल्यमुत्तरांगके ॥ ७ ॥

द्विमध्यमेषु रागेषु नियमो गुणिसंमतः ।
प्रारोहे स्यान्निवक्रत्वं गवक्रं चावरोहणे ॥ ८ ॥

सनी धपौ मपधपा गमौ रिसावरोहणम् ।
अनुलोमे प्रधानांगं रागरूपं प्रदर्शयेत् ॥ ९ ॥

---

गरी निरी सगौ रिमौ पमौ गरी परी च सः ।
इतीमनो भवेद्गांशो राज्यां प्रथमयामके ॥ १० ॥

गरी सधौ सरी गश्च पगौ धपौ गरी च सः ।
भूपाली कथ्यते लोके मनिहीना च गांशिका ॥ ११ ॥
गरी सरी सनी धपौ धसौ रिगौ पगौ रिसौ ।
शुद्धकल्याणरूपं स्याद्गांशं यामेऽग्रिमे निशि ॥ १२ ॥
गरी सनी धनी धपौ सगौ रिगौ धमौ गपौ ।
रिसौ रात्र्यां भवेचंद्रकांतो गांशोऽग्रयामके ॥ १३ ॥
सगौ पगौ पधपगा रिसौ पगौ पधौ च गः ।
जयत्कल्याणकः पांशो गेयो रात्रिमुखे बुधैः ॥ १४ ॥
सगौ पमौ गपौ निश्च सनी पमौ गपौ गसौ ।
मालश्रीः पांशिका सायं गपसंगतिमंडिता ॥ १५ ॥
गसौ धमौ धसौ गश्च मधौ निधौ मगौ च सः ।
हिंदोलो धैवतांशः स्यात् प्रथमे यामके दिने ॥ १६ ॥
सरी सगौ मधौ निधौ सनी धपौ मपौ धपौ ।
गमौ रिसौ मतः पांशो हंमीरो रात्रिगोचरः ॥ १७ ॥
समौ मपौ धपौ मश्च पधौ पमौ पमौ रिसौ ।
केदारो मांशको रात्र्यां प्रारोहे रिगदुर्बलः ॥ १८ ॥
रिपौ मपौ धपौ गमौ पगौ मरी तथा च सः ।
कामोदः पंचमांशः स्यात् प्रथमे यामके निशि ॥ १९ ॥
मरी निसौ रिमौ पश्च धपौ मरी निसौ तथा ।
पूर्वयामे भवेद्रात्र्यां श्यामाख्यो रिपशोभनः ॥ २० ॥
धपौ रिगौ मपौ मगौ मरी सश्च ततः परम् ।
छायानाटाव्हयो र्यंशः पूर्वयामगतो निशि ॥ २१ ॥
रिसौ गरी मगौ पमौ धपौ मगौ रिगौ च पः ।
रिसौ मध्यान्हगो गांशो गौडसारंगनामकः ॥ २२ ॥

---



वेलावलीमेलजन्यरागाः ।

शुद्धवेलावली शुक्लाल्हैया देवगिरीमनी ।
ककुभा नाटिका लच्छाशाखा सर्पर्दिका तथा ॥ २३ ॥
विहंगो देशिकाराव्हो हेमकल्याणनाटकौ ।
माडदुर्गापहाड्यश्च केदारो मलुहाभिधः ॥ २४ ॥
शंकरासहिताः सर्वे वसुचंद्रमिता मताः ।
लक्षणानि ब्रुवे तेषामथो लक्ष्यानुसारतः ॥ २५ ॥

---

सरी गमौ पधौ निसौ निधौ पमौ गमौ रिसौ ।
शुद्धवेलावली धांशा गेया प्राह्ने मनोहरा ॥ २६ ॥
प्रारोहे चेन्मरिक्तासौ निद्व्या गनिवक्रिता ।
अल्हैया स्यात् सुविख्याता धैवतांशपरिष्कृता ॥ २७ ॥
गरी गपौ धनी धसौ सनी धनी धपौ मगौ ।
मरी सश्च सदा रूपमल्हैयायाः श्रुतं जने ॥ २८ ॥
सनी धपौ धमौ गश्च मरी सेति सुविश्रुतः ।
विलोमः स्याद्बिलावल्याः प्रातःकालप्रसूचकः ॥ २९ ॥
सगौ गमौ मपौ धश्च निधौ पमौ गमौ रिसौ ।
शुक्लवेलावली मांशा प्रातर्गीता शुभप्रदा ॥ ३० ॥
निसौ धनी धसौ रिगौ मगौ पमौ गमौ रिसौ ।
देवगिरी भवेत् प्रातः षड्जांशा मोदवर्धिनी ॥ ३१ ॥
सरी गमौ गपौ मश्च धपौ मगौ मरी च सः ।
सपसंवादसंपन्ना द्विमेमनी प्रभातगा ॥ ३२ ॥
सगौ गमौ पमौ गरी गमौ पधौ सधौ पमौ ।
पमौ गमौ रिसौ नित्यं ककुभा मांशिका प्रगे ॥ ३३ ॥
रिगौ मगौ मरी सरी सनी धपौ मपौ धमौ ।
गमौ रिसाविति प्रोचुः ककुभारूपकं परे ॥ ३४ ॥
सगौ मपौ मगौ मरी गमौ पमौ गमौ रिसौ ।
नटवेलावली प्रोक्ता प्रातर्गेयांशमा जने ॥ ३५ ॥

पमौ गरी पमौ गधौ निसौ निधौ पमौ गमौ ।
रिसौ लच्छाद्यशाखा स्यात्प्राह्ले धैवतवादिनी ॥ ३६ ॥
सरी गमौ धपौ निधौ निसौ निधा पमौ गमौ ।
रिसौ सर्पर्दिका प्रातः सपसंवादमंडना ॥ ३७ ॥
रागवृंदे तथाऽप्यत्र कामचारप्रवर्तनात् ।
लक्ष्यमार्गमनुल्लंघ्य बुधः कुर्याद्यथोचितम् ॥ ३८ ॥
यतो लक्ष्यप्रधानानि शास्त्राण्येतानि मन्वते ।
तस्माल्लक्ष्यविरुद्धं यत्तच्छास्त्रं नेयमन्यथा ॥ ३९ ॥
निसौ गमौ पनी सनी धपौ गमौ पगौ मगौ ।
रिसाविति विहंगः स्यान्नक्तं रोहेऽरिधोंऽशगः ॥ ४० ॥
सधौ पगौ पधौ सधौ पगौ पधौ पगौ रिसौ ।
देशिकारोऽमानिधांशः प्रातर्गेयोऽपि विन्मते ॥ ४१ ॥
पधौ पसौ रिसौ मश्च गपौ धपौ गमौ रिसौ ।
हेमकल्याणकः सांशः प्रारोहे निधदुर्बलः ॥ ४२ ॥
सगमपा गमौ रिगौ मपौ मगौ मरी च सः ।
नटाव्हयो मतो मांशो द्वितीयप्रहरे निशि ॥ ४३ ॥
गरी सधौ पधौ सश्च गपौ धपौ गरी सधौ ।
मंद्रमध्यस्वरा गांशा पहाडी मनिवर्जिता ॥ ४४ ॥
सगौ रिमौ गपौ मधौ पनी धसौ सधौ निपौ ।
धमौ पगौ भवेद्वक्रं सांशं माडस्वरूपकम् ॥ ४५ ॥
पमौ पधौ मरी पश्च सधौ सरी पधौ मरी ।
दुर्गा गनिपरित्यक्ता रात्रिगेयाऽथ मांशिका ॥ ४६ ॥
रिसौ पमौ पनी सश्च गमौ पगौ मरी च सः ।
मलुहा रात्रिगा मांशा प्रारोहे रिधदुर्बला ॥ ४७ ॥
सनी पनी धसौ निश्च पगौ पगौ तथा च सः ।
शंकरा रिमहीना स्याद्रात्रिगेया च गांशिका ॥ ४८ ॥





## खमाजमेलजन्यरागाः ।

खमाजश्चाथ झिंझूटी सोरटी देसनामकः ।
खंबावती तथा दुर्गा रागेश्वरी तिलंगिका ॥ ४९ ॥
जयावंती तथा गारा कामोदस्तिलकाद्यकः ।
एकादेश मता रागाः खंमाजाभिधमेलने ॥ ५० ॥

---

खंमाजीमेलजा रागा विभज्यंते द्विधा बुधैः ।
अंशस्वरानुरोधेन रहस्यं बहुविश्रुतम् ॥ ५१ ॥
खंमाजो झिंझुटी दुर्गा खंबावती तिलंगिका ।
रागेश्वरी तथा गारा रागा गांधारवादिनः ॥ ५२ ॥
सोरटी देसकाख्यातो जयावंती गुणिप्रिया ।
तिलकादिककामोद एते प्रोक्ता रिवादिनः ॥ ५३ ॥

---

अनुलोमे विलोमे च संपूर्णा झिंझुटी मता ।
प्रारोहे रिस्वरत्यक्तः खमाजो लोकविश्रुतः ॥ ५४ ॥
रिपत्यक्ताऽपरा दुर्गा तैलंगी स्याद्रिधोज्झिता ।
रागेश्वरी स्वयं दुर्गाऽवरोहे ऋषभान्विता ॥ ५५ ॥
खमाजनियमभ्रष्टा खंबावती समीरिता ।
मंद्रमध्यस्थगा गारा झिंझूट्यंगपरिष्कृता ॥ ५६ ॥
सोरटी त्वधगाऽऽरोहे देसः संपूर्ण ईरितः ।
जयावंती द्विगांधारा परिसंगमनोहरा ॥ ५७ ॥
विहंगदेससंचारी कामोदस्तिलकादिकः ।
अथैतेषां क्रमाल्लक्ष्म ब्रुवे लक्ष्यज्ञसंमतम् ॥ ५८ ॥

---

धसौ रिमौ गपौ मश्च गरी सनी धपौ तथा ।
झिंझुटी गांशिका नक्तं स्वमेलोत्थसमाश्रयः ॥ ५९ ॥

निसौ गमौ पनी सश्च सनी धमौ पधौ मगौ ।
खंमाजो गांशको नित्यं द्वितीयप्रहरे निशि ॥ ६० ॥
गसौ निधौ निसौ मगौ मधौ निधौ मगौ च सः ।
गांशिका कीर्तिता दुर्गा द्वितीये यामके निशि ॥ ६१ ॥
निसौ गमौ पनी सश्च सनी पगौ मगौ च सः ।
तैलंगी चौडुवा गांशा रात्रौ द्वितीययामके ॥ ६२ ॥
रिसौ निधौ समौ गश्च मधौ निधौ मगौ रिसौ ।
रागेश्वरी मता तज्ज्ञैर्गांशिका रात्रिगोचरा ॥ ६३ ॥
रिमौ पधौ पधौ सश्च निधौ पधौ मगौ मसौ ।
गांशा खंबावती रात्र्यां मससंगमनोहरा ॥ ६४ ॥
रिगौ रिसौ धनी पधौ निसौ गमौ रिगौ रिसौ ।
गारा संकीर्तिता लोके गांशिका रात्रिगोचरा ॥ ६५ ॥
रिमौ पनी तथा सश्च निधौ मपौ धमौ च रिः ।
सोरटी कीर्तिता रात्रावृषभस्वरवादिनी ॥ ६६ ॥
सरी मपौ निधौ पश्च पधौ पमौ गरी गसौ ।
सोरटीतुल्यरूपोऽसौ देसाख्यो ऽयंशको निशि ॥ ६७ ॥
रिगौ रिसौ निधौ पश्च रिगौ मपौ मरी गरी ।
निसौ रात्र्यां जयावंती परमेलप्रवेशिका ॥ ६८ ॥
पनी सरी गसौ रिश्च पमौ गसौ रिगौ सनी ।
कामोदस्तिलकाद्योऽसौ रिवादी कीर्तितो निशि ॥ ६९ ॥

संधिप्रकाशमेलाः ।

संधिप्रकाशमेलास्ते त्रयो लक्ष्ये समीरिताः ।
भैरवः पूर्विका मार्वा मृदुरिगनितत्रिकाः ॥ ७० ॥
अथ रागान् प्रवक्ष्यामि ह्येतन्मेलसमाश्रितान् ।
अंगप्राधान्यमप्येषां यावल्लक्ष्यज्ञसंमतम् ॥ ७१ ॥



भैरवमेलजन्यरागाः ।

भैरवाख्यसुमेलाच्च जाता रागास्त्रयोदश ।
उत्तरांगप्रधानत्वात् प्रातर्गेयाः सुसंमताः ॥ ७२ ॥
भैरवो रामकेलिश्च कलिंगो जोगियाव्हयः ।
बंगालोऽथ विभासश्च रंजनी मेघपूर्विका ॥ ७३ ॥
प्रभाताख्योऽथ सौराष्ट्री भैरवः शिवपूर्वकः ।
आनंदभैरवो गुणकर्याहीर्यादिभैरवः ॥ ७४ ॥

---

सगौ मपौ धपौ मगौ रिगौ मपौ मगौ रिसौ ।
भैरवो नित्यपूर्णः स्याद्धैवतांशः प्रभातगः ॥ ७५ ॥
सगमपा धपौ मपौ धनी धपौ गमौ रिसौ ।
भैरवांगसमापन्ना रामक्री पंचमांशिका ॥ ७६ ॥
गमौ पधौ मपौ मगौ निसौ रिगौ मगौ तथा ।
कलिंगः स्यात् सुसंपूर्णः पंचमांशः प्रभातगः ॥ ७७ ॥
रिमौ पधौ सनी धश्च पधौ मपौ धमौ रिसौ ।
गहीना जोगिया मांशा कचिद्गांधारसंयुता ॥ ७८ ॥
धपौ मगौ मरी सपौ धसौ धपौ गमौ रिसौ ।
बंगालो धांशकः प्रातर्नित्यक्तो वक्रगो जने ॥ ७९ ॥
धपौ गपौ गरी सश्च गपौ धपौ सधौ च पः ।
विभासो मनिरिक्तः स्याद्धैवतांशः प्रभातगः ॥ ८० ॥
निरी गमौ गरी गमौ निसौ रिसौ मगौ रिसौ ।
रंजनी मेघपूर्वास्यान्मध्यमांशा पधोज्झिता ॥ ८१ ॥
गमौ पमौ रिसौ गमौ धमौ धसौ रिसौ धपौ ।
सौराष्ट्रटंक इत्याव्हो मध्यमांशोऽपि धद्वयः ॥ ८२ ॥
गमौ गरी सधौ निसौ गमौ धपौ मगौ रिगौ ।
ममौ भवेत् प्रभाताख्यो भैरवो मध्यमांशकः ॥ ८३ ॥

गमौ धपौ मपौ गमौ रिसौ मपौ निधौ पनी ।
सधौ पगौ मरी सश्च शिवभैरवकोंऽशधः ॥ ८४ ॥
गमौ रिगौ पमौ गमौ रिसौ गमौ सधौ ममौ ।
गमौ रिसाविति प्रोक्त आनंदभैरवोंऽशमः ॥ ८५ ॥
रिसौ धसौ मरी पश्च धपौ मरी पमौ रिसौ ।
गुणक्री गीयते प्रातर्भैरवांगी धवादिनि ॥ ८६ ॥
गमौ रिसौ रिगौ मपौ धनी धपौ मपौ मगौ ।
मरी सोऽपि सदाहीरभैरवो मध्यमांशकः ॥ ८७ ॥

---

### पूर्वीमेलजन्यरागाः ।

रागा दश प्रसिद्धाः स्युः पूर्वीमेलभवा जने ।
श्रीगौरी मालवी टंकी पूर्वी जेताश्रिका तथा ॥ ८८ ॥
त्रिवेणी पूरियापूर्वधनाश्रीः सायमीरिताः ।
वसंती परजाख्या च रात्र्यामन्तिमयामके ॥ ८९ ॥

---

संपूर्णाऽथ द्विमा पूर्वी मध्यमाल्पा तु टंकिका ।
श्रीरागो ह्यधगो रोहे त्रिवेणी मस्वरोज्झिता ॥ ९० ॥
कलिंगांगा भवेद्गौरी जेताश्रीररिधा मता ।
मालवी त्वनिरारोहेऽवरोहेऽपि धदुर्बला ॥ ९१ ॥
धनाश्रीः पूरियाद्यासौ पूर्व्यंगा चैकमध्यमा ।
द्विमध्यमा तथा तारषड्जचित्रा वसंतिका ॥ ९२ ॥
अपारोहे मगावृत्ता भवेद्रक्तिप्रदा निशि ।
परजाव्हा भवेत् पूर्णा द्विमोत्तरांगशोभना ॥ ९३ ॥

---

निसौ रिगौ मगौ मपौ धपौ मगौ मगौ रिसौ ।
संपूर्णा पूर्विका सायं गांशा मद्वयभूषिता ॥ ९४ ॥



गरी सरी सगौ पधौ पसौ निधौ पगौ पगौ ।
रिसौ टंकी भवेत्पांशा दिनान्ते भूरिरक्तिदा ॥ ९५ ॥
रिसौ मपौ धपौ निश्च सनी धपौ मगौ रिसौ ।
श्रीरागो धगहीनः स्यात्प्रारोहे ऋषभांशकः ॥ ९६ ॥
सनी धनी रिगौ रिश्च मगौ रिसौ रिनी च सः ।
दिनान्ते गीयते गौरी मद्वया ऋषभांशिका ॥ ९७ ॥
रिसौ गपौ गरी सश्च रिपौ धपौ सनी धपौ ।
गपौ गरी स इत्युक्ता त्रिवेणी र्यंशिकाऽप्यमा ॥ ९८ ॥
निसौ गपौ मधौ पश्च मगौ धपौ मगौ मगौ ।
रिसौ जेताश्रिकाऽऽरोहेऽरिधा सायं गवादिनी ॥ ९९ ॥
सपौ गपौ गरी सश्च सगौ मधौ रिसौ तथा ।
मालवी कीर्तिता सायं श्रीरागांगा रिवादिनी ॥ १०० ॥
निरी गमौ पधौ पमौ गमौ रिगौ धमौ गरी ।
सश्च पांशा सदा सायं धनाश्रीः पूरियादिका ॥ १०१ ॥
सगौ मधौ रिसौ रिश्च निधौ पमौ गमौ च गः ।
निमौ गमौ गरी सश्च वासंती सांशिका निशि ॥ १०२ ॥
सनी धपौ मपौ धश्च पगौ मगौ रिसौ तथा ।
परजा सांशिका पूर्णा निशीथात्परमीरिता ॥ १०३ ॥

### मारवामेलजन्यरागाः ।

मारवामेलनोत्थास्ते रागा द्वादश विश्रुताः ।
सायंगेया भवेयुः षट् प्रातर्गेयास्तथैव च ॥ १०४ ॥
पूरिया मारवा जेता गौरा साजगिरी तथा ।
वराटीसहिता एते सायंगेया मता बुधैः ॥ १०५ ॥
ललितः पंचमश्चैव भट्टियारो विभासकः ।
भखारः सोहनी ख्याताः प्रातर्गेया विदां मते ॥ १०६ ॥

---

अथैतेषां क्रमाल्लक्ष्म ब्रूमो लक्ष्यानुसारतः ।
पूरिया मारवा रागावपौ संगीतविन्मते ॥ १०७ ॥
सायंगेया सदा पूर्या पूर्वांगप्रबला मता ।
सत्युत्तरांगप्राबल्ये सोहन्यंगं प्रदर्शयेत् ॥ १०८ ॥
हिंदोलांगयुता मार्वा रिधसंवादमंडिता ।
गनिसंवादपूर्यायां अवश्यं भेदमादिशेत् ॥ १०९ ॥
साजगिरी मता लक्ष्ये द्विधा द्विमा मनीषिभिः ।
प्रतिमूर्तिर्विभासस्य सायंगेया वराटिका ॥ ११० ॥
द्विधैवतस्तथा द्विऋषभो जैत्रो भवेत् पृथक् ।
कल्याणीमेलजो लक्ष्ये जयत्कल्याणको मतः ॥ १११ ॥
ललितः पंचमश्चैव परिक्तौ संमतौ जने ।
द्विमध्यमयुतौ तौ स्तो निशीथे भूरिरक्तिदौ ॥ ११२ ॥
ललितांगं स्वतंत्रं तदवश्यं भेददर्शकम् ।
हिंदोलांगसमापन्नः पंचमो द्वंद्वमध्यमः ॥ ११३ ॥
सोहन्यां पंचमाभावः धगसंगत्यभीष्टदा ।
सपाः पंचमभख्खारभट्टियारविभासकाः ॥ ११४ ॥
पंचमो ललितांगः स्याद्भख्खारस्तदभावतः
भट्टियारस्तु संपूर्णो मध्यमांशो मते विदाम् ॥ ११५ ॥
विभासाख्यः सुसंपूर्णो गपसंगतिशोभनः ।
मनिदौर्बल्यतोऽवश्यं प्रातः स्यादतिरक्तिदः ॥ ११६ ॥

---

गनी रिसौ निधौ निश्च मगौ मधौ रिसौ तथा ।
मगौ रिसौ भवेत् पूर्या सायं गांधारवादिनी ॥ ११७ ॥
धमौ गरी गमौ गश्च रिसौ निधौ मधौ सरी ।
मारवा ऋषभांशाढयाऽपा सायं चित्ररूपिणी ॥ ११८ ॥



सगौ पगौ रिसौ गश्च पगौ रिगौ मधौ मगौ ।
रिसौ जैत्रो भवेत् पांशः पधगस्थायमंडितः ॥ ११९ ॥
मगौ रिसौ निरी निपौ मगौ मधौ सनी रिगौ ।
रिसौ सायं भवेन्मालीगौरा ऋषभवादिनी ॥ १२० ॥
निरी गमौ गरी सश्च निधौ मधौ सरी सगौ ।
मनी धमौ धमौ गश्च पगौ रिसौ तथैव च ॥ १२१ ॥
साजगिरी मता सायमप्रसिद्धाऽथ गांशिका ॥
पधौ गपौ धमौ गरी गमौ गरी पुनश्च सः ।
गांधारवादिनी ख्याता वराटी भूरिरक्तिदा ॥ १२२ ॥
पूर्वीमेलगताप्यन्या वराटी श्रूयते क्वचित् ॥
निरी गमौ मधौ ममौ गमौ धनी सरी निधौ ।
मधौ ममौ गरी सश्च ललितो मध्यमांशकः ॥ १२३ ॥
मधौ सनी धमौ धश्च मगौ मगौ रिसौ समौ ।
गमौ धनी धनी मधौ मांशः पंचमकस्त्वपः ॥ १२४ ॥
गरी सनी रिगौ मपौ मधौ मगौ मगौ रिसौ ।
संपूर्णः पंचमोऽन्यः स्यान्मध्यमांशो निशीथगः ॥ १२५ ॥
सधौ पधौ मपौ गश्च मधौ सरी निधौ च पः ।
मपौ गरी तथा सश्च भट्टियारस्तु मांशकः ॥ १२६ ॥
निरी गमौ गरी सश्च गपौ गपौ धमौ गपौ ।
गरी सश्च विभासाख्यो धांशो रात्र्यंतयामके ॥ १२७ ॥
निसौ गमौ पमपगा मधौ मगौ पगौ रिसौ ।
भख्खारः पंचमांशः स्याद्रात्र्यां चरमयामके ॥ १२८ ॥
मधौ निसौ रिसौ सश्च निधौ निसौ निधौ च गः ।
सोहनीरूपमादिष्टं धांशं गीतविशारदैः ॥ १२९ ॥

टिप्पनी ।

पूर्वरागास्तथोत्तररागा जाता समंततः ।
सर्वेभ्य एव मेलेभ्य इति लक्ष्यविदां मतम् ॥ १३० ॥

रागा उत्तरपूर्वास्ते भवेयुः प्रतिमूर्तयः ।
स्वस्वपूर्वाद्यरागाणामिति मर्मविदो विदुः ॥ १३१
रात्रिगेयास्तथा दिनगेया रागा व्यवस्थिताः ।
मध्यमेनानुरूपेण यतोऽसात्रध्वदर्शकः ॥ १३२ ॥
स्वरविकृत्यधीनाः स्युस्त्रयो वर्गा व्यवस्थिताः ।
रागाणामिह मर्मज्ञैर्गानसौकर्यहेतवे ॥ १३३ ॥
रिगधतीव्रका रागा वर्गेऽग्रिमे व्यवस्थिताः ।
संधिप्रकाशनामानः क्षिप्ता वर्गे द्वितीयके ॥ १३४ ॥
तृतीये निहिताः सर्वे गनिकोमलमंडिताः ।
व्यवस्थेयं समीचीना गानकालविनिर्णये ॥ १३५ ॥
प्रातर्गेयास्तथा सायंगेया रागाः समंततः ।
संधिप्रकाशवर्गे स्युरिति सर्वत्र संमतम् ॥ १३६ ॥
ततःपरं समादिष्टं गानं लक्ष्यानुसारतः ।
रिगधतीव्रकाणां वै रागाणां भूरिरक्तिदम् ॥ १३७ ॥
गनिकोमलसंपन्ना रागा गीता विशेषतः ।
मध्याह्ने च तथा मध्यरात्रे संगीतविन्मते ॥ १३८ ॥

---

काफीमेलजन्यरागाः ।

धनाश्रीः सैंधवी काफी धानी भीमपलासिका ।
पटमंजरिका पटदीपिका हंसकंकणी ॥ १३९ ॥
वागीश्वरी सहाना च सूहा सुघ्राइका तथा ।
कर्णाटो नायकी देवसागः पीलुर्बहारकः ॥ १४० ॥
वृंदावन्याख्यसारंगो मध्यमादिस्ततःपरम् ।
सामंतपूर्वसारंगः शुद्धसारंग इत्युत ॥ १४१ ॥
मीयांपूर्वकसारंगः सारंगो बडहंसकः ।
मल्लारः शुद्धपूर्वः स्यान्मीयांमल्लारनामकः ॥ १४२ ॥





गौंडमल्लारको मेघः सूरमल्लारसंज्ञितः ।
सप्तविंशतिरागास्ते काफीमेले समीरिताः ॥ १४३ ॥

---

निसौ गमौ पधौ पश्च: निधौ पगौ पगौ रिसौ ।
अपराह्ले: धनाश्रीः स्यात् पांशाऽऽरोहे रिधोज्झिता ॥ १४४ ॥
निसौ मगौ: मपनिसा: निधौ पमौ गरी च सः ।
पलासी: भीमपूर्वा स्यान्मध्यमांशाऽपराह्णगा ॥ १४५ ॥
आरोहे रिधदौर्बल्यं प्राबल्यं समपेष्वपि ।
अपराह्णोचिते रागे भवेद्वैचित्र्यवर्धकम् ॥ १४६ ॥

---

निसौ: रिगौ मपौ धनी सनिधपा मगौ रिसौ ।
काफी पूर्णा भवेन्नित्यं पंचमांशसमन्विता ॥ १४७ ॥
सरी मपौ धसौ रिश्च निधौ पमौ गरी च सः ।
सैंधवी कीर्तिता शास्त्रे सपसंवादशोभना ॥ १४८ ॥
मपौ निसौ रिगौ: रिश्च सनी धपौ मगौ रिसौ ।
सिंदूरा गीयते लोके पांशाऽऽरोहे गवर्जिता ॥ १४९ ॥
निसौ गमौ पनी सश्च सनी पमौ गसौ तथा ।
धानी लोकप्रसिद्धा स्याद्गांशाऽऽरोहे रिधोज्झिता ॥ १५० ॥
निसौ रिसौ निधौ पश्च सरी मपौ धगौ: रिगौ ।
मगौ रिसौ भवेत् पटमंजरी षड्जवादिनी ॥ १५१ ॥
सगौ मगौ रिसौ रिश्च सनी धपौ रिगौ सपौ ।
मगौ रिसौ भवेदन्या शुद्धमेलोत्थमंजरी ॥ १५२ ॥
पगौ मगौ रिसानिसा गमौ पगौ मनी धपौ ।
मगौ मगौ रिसौ पटदीपकी षड्जवादिनी ॥ १५३ ॥
सगौ मपौ गरौ सश्च निसौ: गमौ: पमौ पगौ ।
पांशाऽपराह्णगा लक्ष्ये कीर्तिता हंसकंकणी ॥ १५४ ॥

सनी धनी समौ गश्च मधौ निधौ मगौ रिसौ ।
वागीश्वरी मता रात्रौ मांशाऽऽरोहे पवर्जिता ॥ १५५ ॥
निधौ पमौ पसौ निश्च पमौ पगौ मपौ गमौ ।
रिसौ रात्र्यां सहाना स्यात् पंशमांशपरिष्कृता ॥ १५६ ॥
निसौ गमौ पनिमपाः सनी पमौ पगौ मपौ ।
गमौ रिसौ सुहा मांशा द्वितीयप्रहरे दिने ॥ १५७ ॥
निसौ मरी सनिसगा मपौ मगौ मनी पसौ ।
धनी पमौ पगौ मरी सश्च सूहाऽपरा क्वचित् ॥ १५८ ॥
धपौ मरी निसरिगा मरी सनी पमौ च पः ।
गमौ रिसौ भवेत्पांशा संगवे सुघराइका ॥ १५९ ॥
निपौ मपौ सनी पमौ पगौ मपौ गमौ रिसौ ।
धहीना नायकी मांशा मध्यरात्रगता जने ॥ १६० ॥
सुहा सुघ्राइका चाथ नायकीकानडाव्हया ।
मृदुधैवतसंयुक्ताः क्वचिल्लक्ष्ये समीक्षिताः ॥ १६१ ॥
निसौ मरी पमौ निपौ सनी पमौ पगौ मरी ।
स इत्युक्तो देवसागः संगवे पंचमांशकः ॥ १६२ ॥
निसौ गरी निसौ पमौ पगौ निसौ रिनी धपौ ।
पीलुर्लक्ष्ये श्रुता गांशाऽपराह्णे भूरिरक्तिदा ॥ १६३ ॥
निसौ गरी सनी सश्च निधौ पधौ निसौ च गः ।
धेनुकामेलनोत्पन्नाऽपरा पीलुर्गवादिनी ॥ १६४ ॥
निसौ गमौ पगमधा निसौ निपौ मपौ गमौ ।
रिसौ भवेद्बहाराख्यो रात्रिगेयोऽथ मांशकः ॥ १६५ ॥
निसौ रिमौ पनी सश्च निपौ मरी तथा च सः ।
अगधा निद्वया त्र्यंशा वृंदावनी मता दिने ॥ १६६ ॥
रिमौ पनी तथा सश्च निपौ मरी पुनश्च सः ।
धगोज्झिता तु मध्याह्ने मध्यमादी रिवादिनी ॥ १६७ ॥



पमौ पनी पमौ रिश्च सरी मपौ निधौ च पः ।
सामंतपूर्वसारंगो रिपसंवादशोभनः ॥ १६८ ॥
सरी मरी पमौ पश्च निपौ मपौ मरी च सः ।
सारंगः शुद्धपूर्वः स्याद्‌र्यंशो सद्वयशोभनः ॥ १६९ ॥
गधत्यागस्तु सारंगे मतं सामान्यलक्षणम् ।
संग्रहणं तयोः स्पष्टं कानडांगं प्रसूचयेत् ॥ १७० ॥
सनी सधौ निपौ धश्च निसौ रिपौ मरी च सः ।
मीयांपूर्वकसारंगो मध्याह्ने ऋषभांशकः ॥ १७१ ॥
निपौ मरी सरी मश्च पनी पनी सनी पमौ ।
रिसौ मध्याह्नगः पांशः सारंगो बडहंसकः ॥ १७२ ॥
निसौ रिमौ पमौ निधौ पनी सनी पमौ रिसौ ।
सूरमल्लारको मांशः सारंगांगेन मंडितः ॥ १७३ ॥
सरी मपौ मपौ धश्च सधौ पमौ सरी च मः ।
अगानिः शुद्धमल्लारो मांशो वर्षास्वभीष्टदः ॥ १७४ ॥
रिमौ रिसौ निपमपा निधौ निधौ निसौ पगौ ।
मरिसा मांशको लोके मीयांमल्लार उच्यते ॥ १७५ ॥
रिमौ रिसौ निपौ निसौ रिमौ रिपौ रिमौ रिसौ ।
ऋषभांदोलितो मेघः सपसंवादमंडितः ॥ १७६ ॥
सनी पमौ पधौ सश्च निपौ मपौ गमौ रिसौ ।
गौंडमल्लारको मांशो वर्षासु सुखदायकः ॥ १७७ ॥
रिगौ रिमौ गरी सश्च मपौ धसौ धपौ मगौ ।
गौंडमल्लारकोऽप्यन्यः श्रूयते लक्ष्यकेंऽशमः ॥ १७८ ॥

### आसावरीमेलजन्यरागाः ।

आसावरी जौनपूरी गांधारो देवपूर्वकः ।
सिंधुभैरविका देसी षड्राग कौशिकस्तथा ॥ १७९ ॥
दरबार्याख्यकर्णाटः कर्णाटोऽड्डाणपूर्वकः ।
नायकीसहिता एते ह्यासावरीसुमेलने ॥ १८० ॥

---

रिमौ पनी धपौ धसौ निधौ पमौ पगौ रिसौ ।
धांशाऽऽरोहे गनित्यक्ताऽऽसावरी संगवे मता ॥ १८१ ॥
मपौ धनी सनी धश्च पमौ पगौ रिसौ तथा ।
जौनपूरी भवेद्धांशा प्रारोहे गविवर्जिता ॥ १८२ ॥
मपौ धपौ सनी सरी सनिधपा मपौ निधौ ।
पमौ पगौ पगरिसा देवगांधारकोंऽशधः ॥ १८३ ॥
रिमौ पनी धपौ सश्च निधौ पमौ पगौ रिसौ ।
गांधारो रिद्वयः प्रोक्तो धैवतांशसमन्वितः ॥ १८४ ॥
पगौ रिगौ सरी निश्च सधौ पधौ सनी धपौ ।
सिंधुभैरविका धांशा मंद्रमध्यप्रचारिणी ॥ १८५ ॥
रिमौ परी मपधपा निधौ परी गरी निसौ ।
संगवे गीयते देशी पंचमांशा सुरक्तिदा ॥ १८६ ॥
निसौ गमौ पधौ पमौ पधपसा निधौ पमौ ।
पगौ मनी धपमपा गमौ गरी पुनश्च सः ।
षड्रागो मिश्रमेलोत्थो धैवतांशोऽपि संगवे ॥ १८७ ॥
निसौ मगौ मपगमा गरी समौ धनी च सः ।
निधौ मधौ निधमपा गमौ गरी पुनश्च सः ।
कर्णाटः कौशिकाख्यातो निशीथे मध्यमांशिकः ॥ १८८ ॥
गरी सनी सरिमपा धनी सनी पमौ पगौ ।
रिसौ न्यंशा तु दर्बारी मध्यरात्रे गदोलिता ॥ १८९ ॥
मपौ धसौ धनी पश्च मपौ गमौ रिसौ तथा ।
तारषड्जांशकोऽड्डाणो रात्र्यां तृतीययामके ॥ १९० ॥
सरी पगौ मरिसमाः पधौ निपौ सनी पमौ ।
पगौ मरी स इत्युक्ता नायकी मांशिकाऽपरा ॥ १९१ ॥

---



### भैरवीमेलजन्यरागाः ।

भैरवी मालकोशाख्य आसावरी धनाश्रिका ।
तोडी बिलासखान्याद्या भैरवीमेलनोत्थिताः ॥ १९२ ॥

---

निसौ गमौ पधौ निश्च सनिधपा मगौ रिसौ ।
संपूर्णा भैरवी प्रोक्ता धैवतांशा प्रभातगा ॥ १९३ ॥
निसौ गमौ धनी सश्च सनी धमौ गमौ गसौ ।
मालकोशोऽरिपः प्रोक्तो मध्यमांशो निशीथगः ॥ १९४ ॥
रिमौ पधौ सनिधपा मपौ धपौ गरी च सः ।
संगवे गीयते ह्यासावरी धैवतवादिनी ॥ १९५ ॥
निसौ गमौ पनी सश्च निधौ पमौ पगौ रिसौ ।
पांशाऽऽरोहे रिधत्यक्ता धनाश्रीरपरा जने ॥ १९६ ॥
निसौ रिसौ धानिसगा रिगौ मगौ रिगौ रिसौ ।
धनी धपौ गरी गधौ पगौ रिगौ मगौ रिसौ ॥ १९७ ॥
बिलासखानिका तोडी धगसंवादमंडिता ।
एवं पंच मता रागा लक्ष्ये भैरविमेलने ॥ १९८ ॥

---

### तोडीमेलजन्यरागाः ।

तोडी गुर्जरिकाख्याता मूलतानी तथैव च ।
त्रयो रागा मतास्तज्ज्ञैस्तोडीमेलसमुद्भवाः ॥ १९९ ॥

---

धनी सरी गरी सश्च मपौ धपौ मगौ रिसौ ।
संपूर्णा तोडिका ज्ञेया धैवतांशाच संगवे ॥ २०० ॥
निसौ रिगौ मधमगा निधौ मगौ रिगौ रिसौ ।
गुर्जरीतोडिका धांशा संगवे पंचमोज्झिता ॥ २०१ ॥
निसौ मगौ पमधपा निधौ पगौ पगौ रिसौ ।
मूलतानी भवेत् पांशाऽऽरोहेऽरिधाऽपराह्णगा ॥ २०२ ॥

इति रागाध्यायः ।

गुणाब्धिवसुशीतांशुमिते शाके सुमङ्गले ।
कृष्णाष्टम्यां श्रावणस्य विश्रुते पुण्यपत्तने ॥ २०३ ॥
याता संपूर्णतामेषाभिनवा रागमञ्जरी ।
संङ्गीतमधुभृङ्गाणां तनुतामतनुं मुदम् ॥ २०४ ॥

---

इति विष्णुशर्मविरचिताभिनवरागमंजरी समाप्ता ।

---

शुभं भवतु ।

समाप्तम् ।

# परिशिष्टम् ।

## ग्रंथोक्तरागाणां स्वरस्वरूपस्पष्टीकरणम् ।

### लिपिसंकेतः ।

अधोबिंदुः स्वरो मन्द्रस्तारो बिंदुशिरा भवेत् ।
बिंदुहीनोऽथ शुद्धस्याद्विकृतानधुना ब्रुवे ॥ १ ॥
अधोरेखांकिता ज्ञेयाः कोमलास्तीव्रमः पुनः ।
ऊर्ध्वरेखायुतो लिप्यां संकेतोऽत्र समाहृतः ॥ २ ॥

---

### कल्याणीमेलजन्यरागाः ।

( १३ )

१ इमनः– ग, रि, नि़रि, सा, ग, रिग, पम॑ग, रि, प, रि, सा ।

२ भूपाली– ग, रि, साध़, सा, रिग, पग, धपग, रि, सा।

३ शुद्धकल्याणः–ग, रिसा, रिसा नि़ध़प़, ध़सा, रिग, पग, रि, सा ।

४ चंद्रकांतः– ग, रि, सा, नि़ध़, नि़ध़प़, सा, ग, रिग, धम॑ग, प, रि, सा ।

५ जयत्कल्याणः–साग, पग, पधपग, रिसा, पग, पधग ।

६ मालश्रीः– सा, गप, म॑ग, प, नि, सां, निप, म॑ग, पग, सा ।

७ हिंदोलः– ग, साध़ म॑ध़सा, ग, म॑धनिध, म॑ग, सा ।

---

८ हंमीरः— सारिसा, गमध, निध, सां, निध, प, मंपधप, गमरिसा ।

९ केदारः— साम, मप, धपम, पधपम, पम, रिसा ।

१० कामोदः— रिप, मंप, धप, गमप, गमरिसा ।

११ श्यामः— मरि, ऩिसा, रि, मंप, धप, मरि, ऩिसा ।

१२ छायानाटः— धप, रि, ग, म, प, मगमरि, सा ।

१३ गौडसारंगः— रिसा, गरि, मग, पमंधप, मग, रिग, प, रिसा ।

---

## वेलावलीमेलजन्यरागाः ।

( १८ )

१ शुद्धबिलावली—सा रि ग म, प ध, नि सां, नि ध, प म, ग म रि सा ।

२ अल्हैया— ग रि, ग प, ध नि ध, सां, सां, नि ध, नि ध प, म ग, म रि, सा ।

३ शुक्लबिलावली—सा ग, गम, मप, धनिधप, मग, मरि, सा ।

४ देवगिरी— ऩिसा, धऩिधसा, रिग, मग, प, मग, म रि, सा ।

५ इमनी— सारिग, मग, पमं धप, मग, मरि, सा ।

६ { ककुभा— साग, गम, पम, गरी, गमप, ध, सां, धप, मपमग, मरि, सा ।
द्वितीयाककुभा-रि, गमग, मरि, सा, रिसा, ऩिधप, मप, धमग, मरि, सा । }

७ नटबिलावली—सा, गम, पम, ग, म, रि, गमप, मग, मरि, सा ।

८ लच्छाशाखः— प, मग, रिप, मग, धनिसां, निध, प, मग, मरि, सा ।

९ सर्पर्दा— सा, रिगम, ध, प, निध, निसां, निध, प, मग, मरि, सा ।

---



१० विहंगः— ऩिसा, गमप, निसां, नि, धप, ग, मप, गमग, रिसा ।

११ देशिकारः— सा, ध, प, गप, धसां, धप, गपधप, ग, रिसा ।

१२ हेमकल्याणः— प़, धप़, सा, रिसा, सामगप, धप, ग, मरिसा ।

१३ नटरागः— सा, ग, म, पगम, रिगमप, मग, मरि, सा ।

१४ पहाडी— ग, रिसा, ध़, पधसा, गपधप, ग, रिसाध़ ।

१५ माडरागः— साग, रिम, गप, मध, पनि, धसां, सांध, निप, धम, पग, मरि, गसा ।

१६ दुर्गा— प, मप, धमरी, प, सांध, सांरिं, पध, मरि, सा ।

१७ मल्हा— रिसा, प़, मप़, ऩि, सा, गमप, गमरि, ऩि, सा ।

१८ शंकरा— सां, निप, निध, सां, निप, गपग, सा ।

---

## खमाजमेलजन्यरागाः ।

( ११ )

१ झिंझुटी — धसा, रिमग, प, मग, रिसा, निधप ।

२ खमाजः— निसा, गमप, नि, सां, सां, निध, मप, ध, मग ।

३ द्वितीयदुर्गा— गसा, निध, निसा, मग, मधनिध, मप, सा ।

४ तैलंगी— निसा, गमप, निसां, निप, गमग, सा ।

५ रागेश्वरी— रिसा, निध, सा, मग, मधनिध, मग, रिसा ।

६ खंबावती— रि, मपध, पधसां, निधप, धम, ग, म, सा ।

७ गारा— रिगरिसा, धनि, पध, नि, सा, गम, रिग रिसा ।

८ सोरटी— रि, मप, नि, सां, निध, मप, धमरि ।

९ देसरागः— रि, मप, निधप, पधपम, गरिग, सा ।

१० जयावंती— रिगरिसा, निधप, रि, गमप, म, रिगरि, निसा ।

११ तिलककामोदः— पनिसारिग, सा, रि, पमग, सा, रिग, सा, नि ।

———





## भैरवमेलजन्यरागाः ।

( १३ )

१ भैरवः— सा, ग, मप, ध, प, मग, रि, गमप, मग, रि, सा ।

२ रामक्री— साग, मप, ध, प, मंप, धनिधप, गम, रिसा ।

३ बंगालभैरवः— धप, मग, मरि, सा, प, ध, सां, धप, ग, मरि, सा ।

४ सौराष्ट्रटंकरागः— गम, पम, रि, सा, गम, ध, मध, सां, रिसां, धप ।

५ प्रभातरागः— गमग, रि, सा, रिसा, ध, निसा, ग, म, ध, प, मग, रि, गम, मं ।

६ शिवभैरवः— गम, ध, प, मप, ग, मरि, सा, म, प, निध, प, निसां, ध, प, गम, रि, सा ।

७ आनंदभैरवः— गम, रि, ग, पम, गम रि, सा, गम, सां, ध, प, मग, म, रि, सा ।

८ अहीरभैरवः— ग, म, रि, सा, रिग, म, प, धनिध, प, मप, मग, मरि, सा ।

९ गुणक्री— रि, सा, ध, सा, मरि, प, धप, मरि, पमरि, सा ।

१० कलिंगरागः— गम, पध, मप, मग, नि, सारिग, मग ।

११ जोगिया— रिम, पध, सां, निधप, धम, प, धम, रिसा ।

१२ विभासरागः— ध, प, गप, ग, रिसा, गप, ध, प, सां, ध, प ।

१३ मेघरंजनी— निरिग, म, ग, रिगम, नि, सां, रिसां, म, ग, रिसा ।

———

## पूर्वीमेलजन्यरागाः ।

( १० )

१ पूर्वी— नि़, सारिग, मग, मंप, धप, मंग, मग, रिसा ।

२ पूर्याधनाश्रीः— नि़रिग, मंप, धप, मंग, मंरिग, धमंग, रिसा ।

३ जेताश्रीः— नि़सा, गप, मंधप, मंग, धप, मंग, मंग, रिसा ।

४ परजः— सां, निधप, मंप, धप, गमग, रिसा ।

५ श्रीरागः— रि, सा, मंप, धप, निं, सां, नि, धप, मंगरि, सा ।

६ गौरी— सानि़ध़नि़, रिग, रिमंगरि, सारि, नि़, सा ।

७ मालवी— सां, पग, पग, रिसा, साग, मंध, रिंसां ।

८ त्रिवेणी— रिसा, गपगरि, सा, रि, प, धप, सां, निधप, गप, गरि, सा ।

९ टंकी— ग, रिसा, रिसा, गप, धप, सां, निध, प, गप, ग, रिसा ।

१० वसंतः— साग, मंध, रिं, सां, रिं, निध, प, मंग, मंग, नि, मंग, मंग, रिसा ।

---



## मारवामेलजन्यरागाः ।

( १२ )

१ मारवा— ध, मंगरि, ग, मंगरि, सा, नि़ध़, मं़ध़, सा, रि ।

२ पूरिया— ग, नि़रिसा, नि़ध़नि़, मं़ग़, मं़ध़, रिसा, मंग, रिसा ।

३ जेतरागः— सा, गप, ग, रिसा, ग, पग, रिग, मंधमंग, रिसा ।

४ मालीगौरा— मंग, रि, सा, नि़, रिनि़, प़, मं़ ग़, मं ध़, सा, नि़रिग, रि सा ।

५ साजगिरी— नि़, रिग, मंग, रि सा, नि़ ध़, मं़ ध़, सा, रि सा, ग, म, निध, मंधमंग, पग रिसा ।

६ वराटी— पधग, प, ध, मंग, रिग, मं ग, रिसा ।

---

७ ललितः— नि, रि ग, म, मंध, मंम, ग, मंध, निसां, रिंनिध, मंध, मंम, ग, रि सा ।

८ सोहनी— मंध, निसां, रिंसां, निध, निसां, निध, ग ।

९ { पंचमः— मंध, सां, निध, मंध, मंग, मंग, रिसा, सा म, ग, मंध, निध, निमंध ।
द्वितीयपंचमः— ग, रिसा, नि़रिग, म, प, मंध, मंग, मंग, रिसा ।

१० भट्टियारः— सा, ध, प, धम, पग, मंध, सां, रिंनि, ध, प, म, पग, रिसा ।

११ विभासरागः— नि़, रिग, मंग, रिसा, गप, गपध, मंग पग, रिसा ।

१२ भखाररागः— नि़सा, गमंप, म, पग, मंध, मंग, पग, रिसा ।

---

## काफीमेलजन्यरागाः।

(२८)

१ काफी– नि सा, रिग, म प, ध निसां, सां नि ध प, मग, रिसा।

२ सैंधवी– सा, रि म प, ध, सां, नि ध प म ग, रि सा।

३ सिंदूरा मप, निसां, रिंगं रिंसा, नि ध प म ग, रिसा।

४ धनाश्रीः– नि सा, ग म प, धप, नि ध प, ग, प ग, रि सा।

५ भीमपलासी– नि सा म, ग म, प, निसां, नि ध प म, ग रि सा।

६ धानी– नि सा ग, म प, नि सां, सां नि प, म ग सा।

७ पटमंजरी– नि सा, रि सा, नि ध प, सा, रि म, प, ध ग, रि ग म ग, रिसा।

द्वितीयपटमंजरी– साग, मग, रिसा, रिसा, नि ध प, रि, ग सा, प म ग, रिसा।

८ पटदीपकी– पग, मग, रिसा, नि सा, गम, पगम, नि धप, मगम, ग रि सा।

९ हंसकंकणी– साग, म प, ग रि सा, नि सा, ग, म प, म, प ग।

१० पीलुः– नि सा, ग रि, नि सा, प, म प, ग, नि, सा, रि नि, ध प।

द्वितीयपीलुः– नि सा, ग रि सा, निसा, निधप, धनिसा, ग।



११ वागीश्वरी– सा, नि ध नि सा, मग, मध नि ध, म ग रि सा।

१२ सहाना– नि ध प, म प, सां, निप मप ग, म, प ग, म, रिसा।

१३ सुहा– नि सा, गम, पनिमप, सां, निप, मप, गम, पगम, रि, सा।

अपरसूहा– निसा, मरी, सा, निसा, गम, पम, गम, निप, सां, धनिप, मप, गम, रिसा।

१४ सुघराइका– धप, मरि, निसा, रि, ग, म, रि सा, निप, मप, गम, रि, सा।

१५ नायकीकानडा– निप, मप, सां निप, मप, ग, मप, गम, रिसा।

१६ देवसागरागः– निसा, मरि, पम, निप, सां, निप, मप, गम, रिसा।

१७ बहाररागः– निसागमपगम, ध, निसां, निपमप, गम, रिसा।

१८ वृंदावनीसारंगः–निसा, रि, मप, नि, सां, निप, मरि, सा।

१९ मध्यमादिसारंगः–रि, मप, नि, सां, निपमरि, सा।

२० सामंतसारंगः–प, मप, निप, मरि, सा, रि, मप, निधप।

२१ शुद्धसारंगः– सा, रिमरि, प, मप, निप, मप, मरि, सा।

२२ मीयांसारंगः– सा, निसा, धनि, पधनिसा, रि, पमरि, सा।

२३ बडहंससारंगः–निपमरि, सा, रिम, प, निप, निसां, नि, पम, रि, सा।

२४ शुद्धमल्लारः– सारिम, पमप, धसां, धपम, सारिम।

२५ मेघरागः– रिम, रिसा, निप, निसा, रि, मरि, प, रिम, रि, सा।

२६ मीमांमल्लारः– रिम, रि, सा, निप, मप, निध, निध, निसा, पग, म, रि, सा ।

२७ सूरमल्लारः– निसा, रिम, पम, निधप, निसां, निप, मरि, सा ।

२८ { गौंडमल्लारः–सांनिप, मप, धसां, निप, मप, गम, रि, सा ।
द्वितीयगौंडमल्लारः–रिगरि, म, गरिसा, मपधसां, धपमग।

---

आसावरीमेलजन्यरागाः ।

( १० )

१ आसावरी– रि, म प, नि ध, प, ध सां, नि ध, प, मप, ग, रि सा ।

२ जौनपुरी– म प, ध, नि सां, नि, ध, प, म प, ग, रि, सा ।

३ { देवगांधारः–मप, धप, सां, निसां, रिंसां, निधप, मप, निधप, मपग, पग, रि, सा ।
द्वितीयगांधारः–रिमप, निध, प, सां, निधप, मपग, रि, सा ।

४ सिंधुभैरवी– पगरिग, सारि निसा, धप, धसा, निधप ।

५ देसी– रिमप, रिमपधप, निधप, रिगरि, निसा ।

६ पट्टागः– निसा, गम, प, धप, मपधप, सांनिधप, मपगम, निधप, मपगम, गरिसा ।

---



७ कौशिककानडा–निसाम, गम, पग, मगरिसा, म, ध, निसां, निध, मधनिधम, पग, मग, रिसा ।

८ दर्बारीकानडा–ग, रि, सा, निसा, रि, मप, ध, निसां, निप, मप, ग, रि, सा ।

९ अड्डाणा– मप, धसां, धनिप, मप, गम, रिसा ।

१० द्वितीयनायकी–सा, रिप, गम, रिसा, म, प, ध, निप, सां, निप, मप, गम, रि, सा ।

---

भैरवीमेलजन्यरागाः ।

( ५ )

१ भैरवी– निसा, गम, प, धनिसां, निधपम, ग, रिसा ।

२ मालकोशः– नि सा ग म, ध नि सां, निधम, गम, ग सा ।

३ आसावरी– रि म, प ध, सां, नि ध, प, मपधप, ग, रिसा ।

४ धनाश्रीः– नि सा, गम, प, नि सां, निधपमपग, रिसा ।

५ बिलासखानीतोडी–निसा, रिसा, धनिसा, ग, रिग, मग, रिगरिसा, धनिधप, ग, रिग, धपग, रिग, मग, रिसा ।

---

## तोडीमेलजन्यरागाः ।

### ( ३ )

१ तोडी— ध़ नि़ सा, रि ग, रि, सा, मंप, धप, मंग, रि, सा ।

२ गुर्जरीतोडी— नि़ सा, रिग, मंधमंग, निधमंग, रिग, रि सा ।

३ मूलतानी— नि़ सा, मंग, पमंधप, निधपग, पग, रि सा ।

---

## रागसूची ।

## संगीतो [illegible]

| संस्कृतग्रंथाः | किंमत. |
|---|---|
| १ संगीतरत्नाकरः | ०-८ |
| २ संगीतदर्पणम् | ०-८ |
| ३ स्वरमेलकलानिधिः | ०-३ |
| ४ सद्रागचंद्रोदयः | [illegible] |
| ५ रागमाला | ०-४ |
| ६ हृदयकौतुकम् / हृदयप्रकाशः | ०-८ |
| ७ रागतत्वबोधः / रागमंजरी | ०-८ |
| ८ चत्वारिंशच्छतरागनिरूपणम् | ०-२ |
| ९ संगीतसारामृतोद्धारः | ०-४ |
| १० रागलक्षणम् | ०-६ |
| ११ भावभट्टविरचितग्रंथाः | ०-३ |
| १२ संगीतसुधाकरः | ०-८ |
| १३ श्रीमद्रागकल्पद्रुमांकुरः | ०-३ |
| १४ रागचंद्रिका | ०-३ |
| १५ अष्टोत्तरशततालक्षणम् | ०-२ |
| १६ अभिनवतालमंजरी | ०-२ |

| मराठी ग्रंथ | किंमत |
|---|---|
| १ हिंदुस्थानी संगीत पद्धति ( भाग १ ) छापत आहे | |
| २ " " " ( " २ " ) | २-० |
| ३ " " " ( " ३ " ) | २-० |
| ४ पारिजातप्रवेशिका | ०-५ |
| ५ रागविबोधप्रवेशिका | ०-६ |
| ६ क्रमिक पहिलें पुस्तक | ०-५ |
| ७ क्रमिक दुसरें पुस्तक ( पृ० १४० चीजा ८० ) | ०-१२ |
| ८ क्रमिक तिसरें पुस्तक ... छापत आहे | |

| हिंदी ग्रंथ | किंमत. |
|---|---|
| १ गीतमालिका ( हिंदी भाग १ ते १९ ) प्रत्येक भाग | ०-४ |
| २ रागचंद्रिकासार ( हिंदी ) | ०-२ |
| ३ सुगमरागमाला ( " ) | ०-४ |

पत्रव्यवहार खालील पत्त्यावर करावा.

पत्ताः- भालचंद्र सीताराम सुकथनकर, एम्. ए., एल्एल्. बी., सॉलिसिटर, हायकोर्ट, २२ कार्न्याक रोड, मुंबई.